श्री अणु राघवेन्द्रस्तोत्रम्

पूज्याय राघवेन्द्राय सत्यधर्मरताय च ।
भजतां कल्पवृक्षाय नमतां कामधेनवे ॥ १॥

दुर्वादिध्वान्तरवये वैष्णवेन्दीवरेन्दवे ।
श्रीराघवेन्द्रगुरवे नमोऽत्यन्तदयालवे ॥ २॥

श्रीसुधीन्द्राब्धिसम्भूतान् राघवेन्द्रकलानिधीन् ।
सेवे सज्ज्ञानसौख्यार्थं सन्तापत्रयशान्तये ॥ ३॥

अघं द्रावयते यस्माद्वेङ्कारो वाञ्छितप्रदः ।
राघवेन्द्रयतिस्तस्माल्लोके ख्यातो भविष्यति ॥ ४॥

व्यासेन व्युप्तबीजः श्रुतिभुवि भगवत्पादलब्धाङ्कुरश्रीः
ब्रध्नैरीषत्प्रभिन्नोऽजनि जयमुनिना सम्यगुद्भिन्नशाखः ।
मौनीशव्यासराजादुदितकिसलयःपुष्पितोऽयं जयीन्द्रा-
दद्य श्रीराघवेन्द्राद्विलसति फलितो मध्वसिद्धान्तशाखी ॥ ५॥

मूकोऽपि यत्प्रसादेन मुकुन्दशयनायते ।
राजराजायते रिक्तो राघवेन्द्रं तमाश्रये ॥ ६॥

इति श्री अणुराघवेन्द्रस्तोत्रं सम्पूर्णम् ।